मधुहिङ्गुयुतं पेयं कासे वातकफान्विते ।
कण्ठरोगे मुखे शूले हिक्काश्वासज्वरेषु च ॥ ४३ ॥

इति कट्फलादिः ।

सिंहास्यामृतसिंहीनां क्वाथं मधुसमायुतम् ।
पिबेत्सपित्तकफजे कासे श्वासे क्षये ज्वरे ॥ ४४ ॥
वासकस्वरसः पेयो मधुयुक्तो हिताशिना ।
पित्तश्लेष्मकृते कासे तालीसाद्यं च योजयेत् ॥ ४५ ॥

अथ क्षतकासचिकित्सा—

कासे तु क्षतजे बल्यैर्जीवनैर्बृंहणैरपि ।
शमनं पित्तकासघ्नैरन्यैश्च मधुरौषधैः ॥ ४६ ॥
यवागूं वा पिबेत्सिद्धां क्षतोरस्कः सुशीतलाम् ।
इक्ष्विक्षुवालिकापद्ममृणालोत्पलचन्दनैः ॥ ४७ ॥
मधुकं पिप्पली द्राक्षा शृङ्गी चैव शतावरी ।
द्विगुणा च तुगा क्षीरी सिता सर्वैश्चतुर्गुणा ।
लिह्यात्तं मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ ४८ ॥

इतीक्ष्वाद्यवलेहः ।

मञ्जिष्ठमूर्वानतवह्निपाठां कृष्णां हरिद्रां विलिहेद्विचूर्ण्य ।
क्षौद्रेण कासेऽवलिहेत्क्षतोत्थे पिबेद्घृतं चेक्षुरसे विपक्वम् ॥ ४९ ॥
इक्ष्विक्षुवालिकापद्ममृणालोत्पलचन्दनैः ।
शृतं पयो मधुयुतं संधानार्थं पिबेत्क्षती ॥ ५० ॥

इति क्षतकासः ।

अथ क्षयकासचिकित्सा—

अथ पिप्पल्यवलेहः—

पिप्पलीपद्मकं लाक्षा सुपक्वबृहतीफलम् ।
घृतक्षौद्रयुतो लेहः क्षयकासनिबर्हणः ॥ ५१ ॥

इति पिप्पल्यवलेहः ।

अथ काकुभचूर्णम्—

चूर्णं काकुभंपिष्टं वासकरसभावितं बहून्वारान् ।
मधुघृतसितोपलाभिर्लेह्यं क्षयकासरक्तपित्तहरम् ॥ ५२ ॥

इति काकुभचूर्णम् ।

---

१ ग. 'क्ष्विक्षावा' । २ ग. 'र्वांजगव' । ३ ग. द्राक्षा । ४ ग. 'भमिष्टं ।

अथ पिप्पल्यादिघृतम्—

पिप्पलीगुडसंसिद्धं छागक्षीरयुतं घृतम् ।
एतदग्निविवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥ ५३ ॥

इति पिप्पल्यादिघृतम् ।

अथ पिप्पल्याद्यवलेहः—

पिप्पलीमधुकं पिष्टं कार्षिकं ससितोपलम् ।
प्रास्थिकं गव्यमाज्यं च क्षीरमिक्षुरसं तथा ॥ ५४ ॥
यवगोधूममृद्वीकाचूर्णमामलकाद्रसम् ।
तैलं च प्रसृतांशानि तत्सर्वं मृदुनाऽग्निना ॥ ५५ ॥
पचेल्लेहं घृतक्षौद्रयुक्तं स श्वासकासनुत् ।
क्षयहृद्रोगकासघ्नो हितो वृद्धाल्परेतसाम् ॥ ५६ ॥

इति पिप्पल्याद्यवलेहः ।

संनिपातभवो ह्येष क्षयकासः सुदारुणः ।
संनिपातहितं तस्मात्कार्यमत्र चिकित्सितम् ॥ ५७ ॥

इति क्षयकासः ।

अथ कासश्वासः—

अथामृतादिक्वाथः—

अमृतानागरफञ्जीव्याघ्रीपर्णासुसाधितः क्वाथः ।
पीतः सकणाचूर्णः कासश्वासौ जयत्याशु ॥ ५८ ॥

इत्यमृतादिक्वाथः ।

अथ भार्ग्यादिक्वाथः—

भार्गीं सनागरां सिंहीं कुलित्थं मूलकं तथा ।
पिबेत्पिप्पलिचूर्णेन कासश्वासौ व्यपोहति ॥ ५९ ॥

इति भार्ग्यादिक्वाथः ।

अथ पथ्यादिगुटिका—

स्वरसं शृङ्गबेरस्य माक्षिकेण समन्वितम् ।
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ ६० ॥

---

१ क. °व्याघ्रप° ।

पथ्याशुण्ठीघनगुडैर्गुटिकां धारयेन्मुखे ।
सर्वेषु श्वासकासेषु केवलं वा बिभीतकम् ॥ ६१ ॥

इति पथ्यादिगुटिका ।

नागरेणाभया तद्वत्कासमाशु व्यपोहति ॥ ६२ ॥

इति कासश्वासचिकित्सा ।

## अथ सर्वकासः—

सपिप्पलीपुष्करमूलपथ्याशुण्ठीशठीमूलकसूक्ष्मचूर्णैः ।
गुडेन युक्ता गुटिका प्रयोज्या श्वासेषु कासेषु च वर्धितेषु ॥ ६३ ॥
लघुभृष्टकण्टकारीस्वरसं चपलारजोमिश्रम् ।
यः पिबति तस्य कासाः सश्वासा नाशमुपयान्ति ॥ ६४ ॥
नास्यमानस्य कासेन नासास्रावे स्वरे जडे ।
क्षवथौ गन्धनाशे च धूमपानं प्रयोजयेत् ॥ ६५ ॥
मनःशिलेन मरिचं मांसीमुस्तेङ्गुदैः पिबेत् ।
धूमं तस्यानु च पयः सुखोष्णं सगुडं पिबेत् ॥ ६६ ॥
एष कासक्षयद्वन्द्वसर्वदोषसमुत्थितान् ।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान् ॥ ६७ ॥
मनःशिलालिप्तदलं बदर्या घर्मशोषितम् ।
सक्षीरं धूमपानं तु महाकासनिवारणम् ॥ ६८ ॥
पीत्वा त्रिपुटधत्तूरमूलव्योषमनःशिलाः ।
तेन प्रक्षिप्य वसनं धूमवर्तिं प्रकल्पयेत् ॥ ६९ ॥
धूमं तस्याः पिबेद्यस्तु त्रिदिना*त्कासमस्यति ।
जातीपत्रजटामांसीशिलालैर्गुग्गुलुः समः ॥ ७० ॥
अजामूत्रेण पिष्टोऽयं धूमः कासहरः परः ।
कुनटीसैन्धवं व्योषविडङ्गामरहिङ्गुभिः ।
लेहः साज्यमधुः कासहिक्काश्वासनिवारणः ॥ ७१ ॥

इति कुनट्यादिलेहः ।

## अथ हरीतक्याद्यो मोदकः—

हरीतकी कणा शुण्ठी मरिचं गुडसंयुतम् ।
कासघ्नो मोदकः प्रोक्तः परं चानलदीपनः ॥ ७२ ॥

इति हरीतक्याद्यो मोदकः ।

---

* क. 'नात्कसनं हरेत्' इति पाठान्तरम् ।

---

१ ग. °ठीमुस्तक° । २ क. °शिलालं म° ।

## अथ शर्करासमं चूर्णम्—

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्धितमूर्ध्वमन्त्यात् ।
खादेदिदं समसितं गुदजाग्निमान्द्य-
गुल्मारुचिश्वसनकण्ठहृदामयेषु ॥ ७३ ॥

इति शर्करासमं चूर्णम् ।

## अथ कर्पूराद्यं चूर्णम्—

कर्पूरवालकङ्कोलजातीफलदलं समम् ।
लवङ्गनागमरिचकृष्णाशुण्ठ्यो विवर्धिताः ॥ ७४ ॥
चूर्णं सितासमं ग्राह्यं रोचनं क्षयकासजित् ।
वैस्वर्यश्वासकासघ्नं छर्दिकण्ठामयापहम् ।
प्रयुक्तं चान्नपानेषु भेषजं द्विगुणं हितम् ॥ ७५ ॥

इति कर्पूराद्यं चूर्णम् ।

## अथ मरिचाद्यं चूर्णम्—

कर्षः कर्षांशपलं पलद्वयं स्यात्ततोऽर्धकर्षश्च ।
मरिचस्य पिप्पलीनां दाडिमगुडयावशूकानाम् ॥ ७६ ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यनिर्मुक्ताः ।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥ ७७ ॥

अत्र कर्षांशो द्विकर्षमेव । इति मरिचाद्यं चूर्णम् ।

## अथ कण्टकारीघृतम्—

कण्टकार्यास्तुलां क्षुण्णां कृत्वा द्रोणेऽम्भसः पचेत् ।
तेनाऽऽढकेन क्वाथस्य घृतप्रस्थं पिचून्मितैः ॥ ७८ ॥
रास्नादुस्पर्शषड्ग्रन्थापिप्पलीद्वयचित्रकैः ।
सौवर्चलयवक्षारकृष्णामूलैश्च तज्जयेत् ।
कासश्वासकफष्ठीवहिध्मारोचकपीनसान् ॥ ७९ ॥

इति कण्टकारीघृतम् ।

## अथ व्याघ्रीहरीतकी—

समूलपुष्पच्छदकण्टकार्या तुलां जलद्रोणपरिप्लुतां च ।
हरीतकीनां च शतं निदध्यादेतत्तु पक्त्वा चरणावशेषम् ॥ ८० ॥

---

१ ग. हृद्यं ।

गुडस्य दत्त्वा शतमेतदग्नौ विपक्वमुत्तार्य ततः सुशीते ।
कटुत्रिकं च त्रिपलप्रमाणं फलानि षट् पुष्परसस्य चापि ॥ ८१ ॥
क्षिपेच्चतुर्जातपलं यथाग्नि प्रयुज्यमानो विधिनाऽवलेहः ।
वातात्मकं पित्तकफोद्भवं च द्विदोषकासानपि सत्रिदोषान् ॥८२॥
क्षतोद्भवं च क्षयजं च हन्यात्सपीनसश्वासमुरःक्षतं च ।
यक्ष्माणमेकादशरूपमुग्रं भृगूपदिष्टं हि रसायनं स्यात् ॥ ८३ ॥

इति व्याघ्रीहरीतकी ।

## अथ कासकण्डनोऽवलेहः—

अजामूत्रं शतपलं मन्दाग्नौ गुडपाकवत् ।
पक्त्वा वैभीतकं चूर्णं पलद्वयमितं क्षिपेत् ॥ ८४ ॥
पलं पिप्पलिचूर्णं च पलमात्रं मृतायसम् ।
कण्टकारीफलरजो दद्यादत्र पलद्वयम् ॥ ८५ ॥
ततो माषद्वयं खादेट्टङ्कं कर्षमथापि वा ।
क्षौद्रेणोष्णाम्बुना वाऽपि सर्वकासात्प्रमुच्यते ॥ ८६ ॥
असाध्या भिषजा त्यक्ताश्चिरजाः पथ्यवर्जिताः ।
ये कासास्तेऽप्यनेनाऽऽशु प्रणश्यन्ति न संशयः ॥ ८७ ॥
कासकण्डननामाऽयं योग आत्रेयभाषितः ।

इति कासकण्डनोऽवलेहः ।

## अथ पारदादिचूर्णं योगरत्नालितः—

पारदं गन्धकं शुद्धं मृतं लोहं च टङ्कणम् ॥ ८८ ॥
रास्नां विडङ्गं त्रिफलां देवदारु कटुत्रयम् ।
अमृतां पद्मकं क्षौद्रं पिचुतुल्यानि चूर्णयेत् ॥ ८९ ॥
त्रिगुञ्जः सर्वकासघ्नो ज्वरारोचकमेहनुत् ।

इति पारदादिचूर्णं योगरत्नालितः ।

## अथ कासकर्तरी गुटिका—

रङ्गं कृष्णाभयाक्षारं रूपभागी क्रमोत्तरा ॥ ९० ॥
तत्समं खादिरं सारं बब्बूलक्वाथभावितम् ।
एकविंशतिवारांश्च मधुनाऽक्षमिता गुटी ॥
कासं श्वासं क्षयं हिक्कां हन्त्येषा कासकर्तरी ॥ ९१ ॥

इति कासकर्तरी गुटिका ।

१ ग. कण्टकम् । २ ग. °द्रं विषं तु ।

निषेधः—

मैथुनं स्निग्धमधुरं दिवास्वापं पयो दधि ।
पिष्टान्नं पायसादीनि कासी धूमं च वर्जयेत् ॥ ९२ ॥

इति श्रीयोगतरङ्गिण्यां कासनिदानचिकित्साकथनं नामा-
ष्टसप्ततितमस्तरङ्गः ॥ ७८ ॥

———